दी० १४५००००१/२, तथा गां राचिकस्य प्रभो हासेला-
कृतं दीनारलक्षमेकं, दी० १००००० , पुरीवालानां याच्या
दत्तं दीनारसहस्रत्रिंशकं, अङ्के ३०००० पूर्वदिशि अमु-
केन उत्तरदिशि अमुकेन दक्षिणादिशि अमुकेन निवारितके
हखशफादावार्थे दीनारलक्षमेकं, अङ्के दी० १००००० ,
एषां दीनाराणां मयामुकस्य महत्तस्य[1] ससन्तानस्य
पुत्रपौत्रसहितस्य विक्रीरितम् । आचन्द्रसूर्यसमुद्रपर्यन्तं
तावत् उपभुञ्जनीयम् । अत्र गोत्रजो वाऽन्यो वा दौहित्रो
वा पौत्रो वा यदि केनापि शाचाकृता, तदा मया
ध्यतारणीयम् । अत्र विक्रयभूर्जे दत्तप्रतिभूः स्वपुत्र अमुकः
स्वभार्या अमुकाया अमुकदुहिताया हस्तवाग्भरे सति,
साक्षी सराफ अमुकः, काजे मानुष अमुकसमख्यात् ।
ऊनादिकाक्षराणि प्रमाणम् । लिखितं गं अमुकेन ॥

—=:*:=—

महाश्री शिखदारे[2] मेर अमुकग्रामात् अग्रे
मामुक दारुगामुकमुखात् । अत्र दिने क्रंरा हटेलके
अमुकग्रामे गोटील अमुक सं० भार्या राज्ञी अमुको-
च्यमानामुकाया अमुकग्रामे अमुकदुहिताया वाग्भरे
सति उक्तपत्तिका दत्ता, पादेय[3] दारुग अमुकस्य यथा—
इह देशान्तरे अमुकामुकपुत्रेण विसर्जितपुक्कच(स)स्त्री
अमुकनामा मध्यमविहारीकरणार्थं प्रहिता । मया मास-

---

१ 'महन्तस्य' क.पाठः । २ 'शिव०' क.पाठः । ३ 'पादये' क.पाठः ।

षट्कं तावत् नाङ्गीकारः कुरुतः । अधुना मध्याह्नसमये स्वकं भर्तारं मितिभोजनं शिरोपरि पूर्णं पात्रं गृहीत्वा गतास्मि । ततो मध्यमार्गप्रविष्टात् वनस्पतिगर्हितलतागृहे बलात् रोधित्वा भूमौ स्थापितः, पातितः, अनेन सङ्गकृतः । स्त्रिया बलं विहीनाः सन्ति । लज्जावशात् आक्रन्दनं स्वल्पमेव कृतं । तदनु केनचित् कालेन दारुणसं मानुषः अमुकः, गोरक्षपालः अमुकः, द्वौ तत्र प्राप्तौ । आभ्यां मदीयसं डोडिकावा एतस्य शिरोवेष्टनं तानद्वयं चिह्नं रोधितम् । एतत्समाचारं सत्यं सत्यम् । वक्षिपत्रिकायां साक्षी । अमुकामुकसमरव्यात् । संवत्सरतिथिः देयम् ॥

—=:-०-:=—

महाप्रभुप्राबल्लिकात् ॐ रा ओसरके अहग्रामे चक-मलक अमुकस्य प्रति आज्ञा । इह काटवाटके प्रति लष्कर्या कृते दारदमानुषलद्वयं, शतं २००, तथा ग्रामादिग्रामेऽजं पञ्चकं पञ्चकं द्वि लुलयके शिखदारे मेर्जा अमुकस्य निकटे गमनीयम् । एतस्य खबरं कृत्वा लुलावके प्रतिग्रामे प्रतिग्रामेऽजं द्वयं द्वयं सार्धे गृहीत्वा आगमनीयम् इति । स्वयं मुद्रा सति ॥

——:-०-:——

महाश्रीमहदकपादः खोआं शिखदारे मेर्जा अमुक बा मोकदमानां प्रति । इह एदाकृते सङ्गकृते पादैमूषाकृते

१ 'मं' क पाठः २ 'मह्ला' क. पाठः ।

श्वेतं ञ० शतद्वयं, २००, हं पशुकाविंशकं, २०, घृतं ञ०- सप्तकं ञ० ७, चौद्रं ञ० पञ्चकं, ञ० ५, इन्दन-नाह्वा एकं, मिवहुते, दशकं १० अञ्जपचिणा। किंच यथा जानाति तथा तोफच्य मेया अमुकहस्ते लब्ध-नीयम्। चेतसि भूयात्। मुद्गा[1] सति॥

—:-*०*-:—

फाग्वा सोदरबले शिखदारे स्थित अमुक मेर अमुकपादः। कोठान्तरे मया मेया अमुकेन सलामा-बन्दगे करणपूर्वं कुशलितम्। यथा इह मया सुतस्य कार्यं निकाहं शुक्रवासरे, मदीयमानुष्यसार्धे आगम-नीयम् अवश्यमागमनीयं, मम रञ्ज्येदं मा कार्यम्॥

—:·०*०-:—

महाश्री मेर अमुकपादः। कोशां अमुकहस्तप्रीहे गतंश्चे तं ञ० पञ्चकं तोपच्य अमुकस्य मामेलिका देयं। अवहारं न कार्यं। भोक्तनके ञ० षट्कं ददनीयम्॥

—:·=·*·=·:—

महाश्री[2] मेर अमुकपादात्। तैलवानि अमुकस्य दीपप्रज्व-लने देयं। प्रति प्रेही गतं तैलमनपञ्चकं देवोट अमुकस्य प्रज्वलने देयम्। संवत्सरातिथिः देयम्॥

—०:=*=:०—

अत्र संवत्सरे अमुके अमुकमासे शुक्ले बहुलपक्षे तिथा-

१ 'मुद्रा' ख. पाठः। २ 'महीश्री' क. पाठः।

बमुकायाम् अत्र दिने । अमुकविषयादमुकग्रामादमुके-
नामुकपुत्रेण कुं वा (सति वा) हस्ते सति स्थावर-
धानुष्कचीरिकां करोति । अमुकग्रामादमुकस्यामुक-
पुत्रस्यैवं यथा यथेत्थम् । मयास्य सकाशादेतत्पितृपि-
तामहक्रमागत-भुक्तिभोज्यमानो डारीय-स्थावरनिकटा-
दूनादिकमन्यनामान्तरेणापि यथा रूपयमानां स्वब्रह्म-
देयलोकक्रमे भूप्रस्थाष्टकं वर्षचतुष्टयानां धानुष्कत्वेनेति
यद्गृहीतमस्मिन्स्थावरे कुङ्कुमबीजरोप्यमाने सति बः
कोलकमूलकादिकं चेपनार्थं वा स्फटीकरणार्थं वा
प्रस्थरफलमसूरकलजा यवगोधूमसुगन्धप्रियङ्गमादिकं
तत्प्राप्तलाग्यमाने सति तत्प्रतिवर्षं धानुष्कात् प्रति-
प्रस्थाद्दीनारद्वादशद्वादशकं आश्वयुज्यमहीमाने स्कन्द-
द्रुमे गृहे आनीत्या ददनीयं उद्वहनीयं च । तद्वर्ष-
चतुष्टये व्यतीते सति ततः स्थावरात्प्रस्थाफला यथो-
पपन्नफलभागाद्भागमेकं दानपूर्वके सति देदं मुच्यमान
भागत्रयं मम कार्षभागाय दत्तम् । एवं सजीवनकालं
तावदुपभुञ्जनीयम् । आगम्यमानाक्षेपासनायां भवतस्य
प्यतारणीयम् । स्वात्पृष्ठादुन्मोच्यमानं ददनीयम् । एवं
मातार्थे दत्तप्रतिभू अमुकग्रामीय पितृव्यभ्राता अमुका-
मुकपुत्रः कुं वा हस्ते सति स्थितः । साक्षी । ऊनाधिकान्य-
क्षराणि प्रमाणम् । एवं स्थावरधानुष्का निस्साहने

१ 'मुकस्यायाम्' ख. पाठः । २ 'बृं' ख. पाठः

चीरिका भविष्यति ॥

अत्र दिने विषये पत्तपुं भट्ट अमुकेनामुकपुत्रेण हस्ते सति उन्मोचनवाटकोऽयं दत्तः। तत्र कुम्भले भट्टामुकसं यथेत्थम्। मया भवता ऊर्ध्वापारकेयराजानअमुकस्य मार्गे दीनारसहस्रदशानां (१००००) पृथग्दत्ता स्थिता, शेषानुसारे प्रतिभाव्ये यत्परिस्थापितं तदर्थादागम्यमानाद्वेपासनायां वा पतितस्य मानपालनं मया स्वकृत्या निवारनीयं। यदि निवारितं तदा प्रतिभुवस्य पालनं। अत्र प्रतिभूः जयवने गं वै अमुकामुकपुत्रः कुं सति स्थितः। संवत्सरमासतिथिः लिखितम् ॥

—:=:-०-:=:—

अत्र संवत्सरे अमुके अमुकमासेऽमुकपक्षे तिथौ अमुकायाम् अत्र दिने। विषये अमुकग्रामात् अमुकामुकपुत्रः स्वमतेन विभङ्गक्रियाकारचीरिकां कुरुतः, एकैकस्य परस्परानुमतेन करोति। यथा आवयोः पितृपितामहक्रमागतभुक्तिभोज्यमानलोत्रलोत्राश्रयस्वार्जितोपार्जितधनस्वदायात्संप्राप्तासितस्थावरस्थण्डिलगृहघाटोड्डारारामाद्योटवृक्षवनस्पत्यादिकात्पदजीवनगुण्याद्दिराजराशिसंप्राप्तशिलकोड्डारदीनारचीरिकाबन्धलाभधानुष्कग्राह्यस्वरूपधनप्रधनगोप्राणिपशुप्राण्याधिगोटकाटयोरप्रच्छन्नदण्डवस्त्रादिकादग्रभागादमुकवचसात्परिस्थाप्य शिष्टमवशिष्टमर्धादिकया भागीकार्यम्। एकाशयेनैकसमूहेनैकचित्तेनैकसमयस्थादानेनैकस्मिन्निवसनीयम्। अथ

वा विस्मयं यदि गतं तदातदा पृथक्पृथक्निवसने सति मध्यात्समांशेन पित्रोः भोजनाच्छादनादि भर्तव्यं दत्त्वा। यथा मठदेवगृहनिर्गुष्टभोगपतिस्वधान्यबन्धलाभं राशिवतां निवर्तना कर्तव्या, तथा रणे दिशापरेशेणायां राजकुले प्रस्तरप्रस्तारिके यतो यतो यद्यत्किञ्चिद्दातुं गच्छति, तत्समांशेनोद्वहनीयम्। चिकित्सभव्यमग्रे फेरणार्थं च। अत्रानुपालनायोद्वहनाय दत्तप्रतिभूः अमुकग्रामादमुकपुत्रः अमुकेन दत्तः। तथा अमुकेन दत्तं। अमुकग्रामादमुकोऽमुकपुत्रः एवमेवं। परस्परमेकैनैकस्य दत्ता। कुंवा हस्ताभ्यां स्थित्य। इत्यमुकादीनां समख्यात्॥

'वृद्धौ च मातापितरौ भार्या स्वामी सुतः शिशुः।
अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥ १ ॥'

—:=०*०=:—

अत्र संवत्सरे अमुके अमुकमासे अमुकपक्षे तिथावमुकायाम् अत्र दिने। अमुकविषयादमुकग्रामात् अमुकेनामुकपुत्रेण हस्तोपलक्षिते सति वा कुण्डलिकाकरणपूर्वके सति गुण्टीचीरिका करोति। यथा अमुकविषयस्थादमुकग्रामीयामुकस्यामुकपुत्रस्यैवं। यथेत्थम्। मदीयस्मादमुकखवाशादमुकखेत्रादमुकादीनां स्थावरसमीपाच्छिलकभूप्रस्थाष्टकं स्वअक्षदेयं ऊनाधिकमन्यनामान्तरेणापि ज्ञायमानमद्यारभ्य वर्षपञ्चकं तावद्गुण्ठले

१ 'स्वाध्वी' ख. पाठः।

गृहीतम्। तत्प्रतिवर्षमुप्राप्तकालान्तराधान्यखारीषट्कं गृह-प्राप्तमथ वा हम्मारं कोष्ठागारप्राप्तमानीत्य देयम्। अस्मिन्वर्तमानशरदि प्रतिवर्षमुपर्युक्तवद्दातव्यम्। अत्रा वर्षा व्यतीते सति, निर्वाह्यमाने कालान्तरे सति, आसन्तते गुण्ठिकायत्ता यदि चलति, निर्विघ्नभोग्ये सति तत्स्थावरं भोगपतेरायत्तम्। अथ वा योऽस्माद्दत्त-विवर्षी न गुण्ठिले वर्षपञ्चकं यावत्स्फुटीकरणाय गृहीतं। एतन्निर्वाहे प्रसिद्धे सति तत्प्रतिवर्षे उपास्त सति। वस-न्तस्य शरदात् अन्तशवटिकाद्वयं उद्वहनीयं। पालनीयं। संरक्षणीयं। अत्र दानार्थं वा उपर्युक्तं चाद्वहनाय संरक्ष-णाय गुण्यार्थाद्दत्तप्रतिभूः अमुकग्रामादमुकपुत्रः कुं सति स्थितः। अनेन दत्तास्थितगुण्यमध्यस्तलेखे तत्र फलं न किञ्चित्॥

—:०-:०:-०:—

अत्र संवत्सरे अत्र दिने अमुकविषयादमुकग्रा-मादमुकः अमुकपुत्रः अमुकपौत्रः तथैतद्भार्या राज्ञी अमुकोच्यमानामुकायामुकग्रामीया दुहिताया चेतौ दम्पत्योर्हस्तदानवाग्भराभ्यां वा कुं सत्ताक्षरकरणपूर्वके सति लिखितक्रियाकारचीरिकां कुरुतः, एवमतोऽस्मदीय-पितृव्यजभ्रातामुकाग्रजपुत्रामुकस्यैवं। यथेत्थम्। प्रागस्म त्पितृव्यजभ्रातृ-अमुकोच्य(मानो)पयुक्तस्य यतो यतोऽयं विद्यमानविभङ्गक्रियानुसारं पृथक्कृतस्थितव्यवस्थलाद्

सामर्थ्याद्विक्रव्यम्, तत्समान[1]सन्तानत्वाद्विद्यापठितत्वाद्वा तन्मयास्याभ्युपगमाद्दत्तं । यथा मम यथाविद्यमानगृह-गृहोपस्करणारम्भसंरम्भागुप्तस्थितसुवर्णरौप्यताम्रभाण्ड-दीनारनिष्कदेवार्चनं रहस्य-शास्त्रागमगामिकावन्तचतुर-चतुरप्रस्थानस्थावरस्थण्डिलगृहषाटोद्धारामाच्चोटवृक्षव-नस्पत्यादिपदजीवनगुणढ्यादिदीनारचीरिकापत्रिकागृहत्र-न्वा गोप्राणिपशुप्राणिगोटकदायरपचभाण्डवस्त्रा-लङ्करणप्रकरणस्वरूपधनप्रधनधान्यदीनारलवणवसुऊ-र्णालकर्पटघृतादिस्वोपार्जितोपरार्जितस्वदेशलठिकामठि-कापूरणिकाप्राकारकरपुरप्रकरणधानुष्कग्राह्याग्राह्यद्रा-चाशिण्डादिकीलकमूलकादिबन्धसम्प्राप्तबन्धलाभादि-ग्रामगोषेभ्यो यतो यतो यद्विद्यमानप्रमास्वस्वदायसं-प्राप्तं वामत्रागमभुक्तिभोज्यमाने सति तस्मादर्धं ममा-[2]त्मनो दानबन्धविक्रियोपभोगकरणकं तथा कस्मै-चित्सद्ब्राह्मणस्वयम्भुवे दक्षिणायै परलोकपुण्यवृद्ध्यर्थं परिस्थापितवर्जं शिष्टद्वितीयार्धं अस्य कृत्रिमपुत्रस्य विधेयस्याज्ञाधरस्याविरुद्धस्य विरुद्धसमाश्रितपरिवर्जित-स्य मद्गृहनिवसमानस्य सद्धितानुमतेन भक्त्या अद्रो-हितया प्रक्रम्यमानस्य वलगमानस्यासद्गृहे दिशि दिशि परेणानुमतेन भक्त्या अद्रोहितया प्रक्रम्यमानस्या-सद्गृहे क्रमेण रणे सेवाराकुले वा गृहोद्वहनकरणपूर्वं

---

१ 'समासामन्ता' ख. पाठः । २ 'त्मानो' क. पाठः ।

निवसत्युपगमत्वादावाभ्यामस्य दत्तं परित्यक्तं च आव-योर्यावत्संस्थितं यः सत्येनास्मदीयं वा अस्मदीयराटके आवाभ्यां विना दानबन्धविक्रयीकरणं न कार्यम् । अस्मन्मतं विना च न किञ्चित्कर्तव्यम् । आवयोर्म-ध्यादेकस्मिन्विपन्ने सति द्वितीयस्य पितुर्वा मातुर्वा भर्त-व्यतस्य सतः तदेव तस्य सर्वमायत्तम् । आवयोर्यथा पुरोहितवचसा पद्यमानकर्मक्रियाविधानसमाश्राद्धव-र्षादिनिवर्तनाकरणपूर्वके सति उपभुञ्जनीयं भोक्तव्यं च । एवमतः क्रियया न चलनीयं, एवमित्यत्रार्थे समग्रक्रियापालनाय दत्तप्रतिभूः अमुकविषयादमुकग्रामा-दमुकोऽमुकपुत्रो यस्य द्वितीया व(य)स्याः सत्पुरोहितभट्ट-अमुकपुत्रोऽमुकपुत्रः । मयास्य दत्ता, आवाभ्यामुक्तं अस्याः ससस्तानस्योपर्युक्तकुर्वमनुपाल्यमानस्य उक्तं च । अत्र साक्षी अमुकादयः ॥

—:-=-*-=-:—

संवत्सरे अत्र दिने अमुकविषयादमुकग्रामादमु-कोऽमुकपौत्रः तथैतदीयभार्या राज्ञी अमुकोच्यमानामु-कायामुकग्रामीयामुकदुहिता चेताव·········युवां हस्ते सति वा कुं वाग्भराभ्यामुपलक्षिते सति परित्यागची-रिका कुरुतः । एवं यथा ददतः अमुकविषयादमुक-ग्रामादमुकस्यामुकपुत्रस्य तस्यैवं यथेत्थम्—मम यथावि-

१ 'दत्त्वं' क पाठः ।

द्यमानामुकविषयादमुकप्रदेशे अमुकस्थानलग्नमानस्वब्रह्म-
देयलोकादमुकस्वग्राशादमुकत्तत्राद्भूमिखारीत्रयमनेन स-
ःपितृव्यजामुकाभिधसकाशात्सम्प्राप्तमस्माद्दिना यदभूत्
तन्मयाद्य बोधितहेतुनार्थे अनेन ममामुकवचसा किञ्चि-
द्दत्तं तन्मयाद्य अस्य परित्यागोऽयं दत्तः । एतस्मान्मया
स्वभार्येण वा पुत्रैः सहितेन छलेन वा बलेन वा
सत्सन्तानेन वा सदेशजेन वा सगोत्रजेन वा सद्धेतुना
पुरोहितसद्ब्राह्मणेन वा सच्छ्वशुरकुलजनेन वा रोधनपरि-
पन्थानादि-चक्रिका भूचक्रिका कुन्तिका हिंसा सम्रु-
दकुच्छ्वविशङ्कारोधनं न कार्यम् । एवमतः क्रियया उप-
युक्तवत्संबन्धायाः सत्यान्न चलनीयम् । अत्र समग्र-
क्रियानुपालनाय परित्यजनाय च प्रतिभूः अतः स्वदे-
यस्थितामुकः अमुकपुत्रः कुं त्रा हस्ते सति स्थितः ।
अत्रात्यकेयदेशादिपत्यामुकादीनां समचात् ॥

---

इति क्षेमेन्द्रविरचिते सर्वशास्त्रोद्धृते
लोकप्रकाशे द्वितीयः प्रकाशः ॥ २ ॥

---

१ 'स्व' क.पाठः । २ 'जनने' क.पाठः । ३ 'कुश्छविश्छका' क.पाठः ।

अथ

# तृतीयः प्रकाशः ।

अथातः संप्रवक्ष्यामि तृतीयं लोक(लेख)संग्रहम् ।
पदैर्नानाविधैर्लोकप्रकाशोऽयमुदीरितः ॥ १ ॥

उत्तरीयम् । चादरीयम्[1] । शिखालाहलम् । नडुलम् । विडालम् । अलाबुपत्रम् । गडुकम् । अलाबुगडुकम् । कलशम् । कमण्डलुम् । भृङ्गारम् । गङ्गालीसकोलम् । सौधम् । वान्ताकम् । पर्यङ्कबन्धम् । गवाक्षम् । खजालम् । वेदिः । गोमयम् । कठम् । कटाहं[2] वा । मलयजम् । चन्दनम् । हरिचन्दनम् । श्रीखण्डचन्दनम् । रहः । प्राजा । पालाश्मशानम् । श्मशानत्रिटपम् । हरावासः । छुरिका । कटारिका । योगपट्टम् । पूजापट्टम् । कम्बलीपट्टम् । कोनपट्टम् । लिङ्गपीठम् । भद्रपीठम् । कामरीपट्टम्[3] । जालन्धरीपीठम् । पूर्णागिरिपीठम् । उज्जयिनीपीठम् । श्रीपीठम् । यागपीठम् । रङ्गपीठम् । दिविरः । गङ्गादिविरः । नगरादिविरः । ग्रामादिविरः । खवाशादिविरः । कायस्थलिपिज्ञः । गणकः । गणशूलः । संख्यापतिः ।

---

१ 'शीय' क. पाठः । २ 'कठा' ख. पाठः । ३ 'पीठम्' क. पाठः ।

नन्दिनागरगौडार्कविधित्रैनायकीलिपिः ।
तत्संख्याकलनाध्यक्षो गणाध्यक्षो विधीयते ॥ १ ॥

भोज्यभुक् । भोक्ता । निर्गुटः । आयुक्तः । खड्गधारी । पशुपालः । गोधारः । गो आलयः । गोनिलयः । गोमयः । गो अङ्गायटिः । गोचरम् । गोभारती । गोआसा । गोवसुन्धरा । गौदन्ति । गौदन्ता । गौरश्मिः । गौपस्तवे । नयरिगौ । द्यौ (गौ) सरयानि । गौवनम् । गौसस्यम् । गौरङ्गनाभे । तुरङ्गम् । गोविमानम् । गोसूक्तम् । गौ श्रावकः । गौस्थालिः ॥

गोशब्दस्य चतुर्विंशत्युक्तमर्थं हि सूरिभिः ।
.........पुराणां दश प्रोक्ताः प्रसिद्धिता ॥ १ ॥

त्रयोदश गोशब्दं चतुर्विंशत् ।

ठक्कुरो नापितश्चैव मङ्गल्योऽपि कुशाग्रधीः ।
विशाखखुरकर्मज्ञो वाक्छुते वैदिकं मतम् ॥ १ ॥

ठक्कुरायनः । शार्ङ्गी । गोलग्नादिशः ।

अधिस्वामी तथा शूरः तुरुष्कः सर्वमान्त्रिकः ।

गोशब्दस्यान्यशास्त्राभिप्रायः ।

वाग्मिगोरश्मिवातेषुपश्वाद्दिस्वर्गवारिषु ।
दशस्वर्थेषु मेधावी गोशब्दमवधारयेत् ॥ १ ॥

लवणम् । कृष्णलवणम् । घोरलवणम् । स्फुटिकाकारलवणम् । मिश्रलवणम् । पकेष्टलवणम् । पृष्ठलवणम् । भ्रमरलवणम् । चारलवणम् । स्फेना-

द्रुमलवणम् । अम्ललवणम् । सैन्धवलवणम् । अपुद्रुमम् । वेश्मवाहिनी । धरालम्बः । पर्वणम् । अरित्रम् । कूटपूटिः । त्रिष्कूरा । प्रेतोद्देहम् । दात्रम् ।
.........द्रुमः ।

द्राक्षाफलम् । अक्षोटफलम् । चिरफलम् । कपित्थफलम् । चोया(चा)फलम् । सूर्णफलम्[1] । आरफलम् । काकवृष्ट्योद्भवफलम् । निम्बफलम् । दाडिमीफलम् । शाकफलम् । मूल्यफलम् । नारङ्गफलम्[2] । सस्यफलम् । नारिकेलफलम् । यवफलम् । क्षेत्रफलम् । गोधूमफलम् । वनफलम् । काकद्राक्षाफलम् ।

पादत्राणम् । पादुकः । पादावरोहकः । शल्कम् । तीक्ष्णकारि ।

नौः । तरणिः । सेतुः । वारिवारणम् । उडुपम् ।

…खण्डम् । द्राक्षासर्मकरण्डम् । इष्टिका । धान्येष्टिका । कूपम् । तडाकम् । गर्तम्[3] । परिखा । खातम् । भृङ्गः ।

विलासी । कामुकः । दयितः । रमणः । दासः । भृत्यः । स्वामी । अधिपतिः[4] ।

प्रिया । कान्ता । वराङ्गना । महिषी । रसा । मदना । महिषीरसा । कामिनी । बाला । चकोरचक्षुषी । सस्तेवन्तकम् । वेश्या । पन्यस्त्री[5] । देव-

---

१ 'मूर्ण्य'क.पाठः । २ 'नारेङ्ग'क.पाठः । ३ 'गर्त्तम्'क. पाठः । ४ 'आधिप' क. पाठः । ५ 'पत्यस्त्री' क. पाठः ।

दासी । भार्या । स्त्रियाः । युवतयः ।

गोबन्धनालयम् । गोबन्धनकीयकम् । गोबन्धनकेलकम् । गोमूत्रनाडी । वेश्मनिका । एकक-मिलः । खेचरी । घण्टा । चिचिल्ला ।

भासापुत्रः । अर्भकः । सुतः । शिशुः ।

लठिका । मठिका । मन्दिरम् । ओकम् । भवनम् । गृहम् । प्राकारम् । दिविरम्[1] । पट्टमण्डपम् ।

कन्दुकारः । सूपकारः । कुम्भकारः । कन्दुः । कन्दुधारम् ।

किङ्किनी । मकुरम् । दर्पणम् । धूम्रम् । आधारधूम्रम् ।

मूषकः । आखुः । गर्तोटः । सर्वापहारी । कन्द्वांगारकर्षणम् । वालुकाः । सिक्ताः । सूक्ष्मा । ग्रीवायकः ।

मन्दविसर्पिणी[2] । पिप्पी । टिट्टिभोम्भरस्वामी । चटः । चटकः । कलविङ्कः[3] ।

मीनः । मत्स्यः । वालचरः । शफरी । शफा-लिकः । गिरिकर्णिकः । कवरी । वीथिः । तोर-मानिष्काः ।

दीनारः । ग्रैवेयकः । कन्दुलिकः । लुहरवका । चारसी । स्रवा । कुल्या । कुलनदी ।

---

१ 'गिविरम्' क. पाठः । २ 'मर्म' क. पाठः । ३ 'काल' ख. पाठः ।

कुमारी । पत्रिका । कुटिका । दुहिता । कन्या । अंकः[1] । स्वसा । भगिनी । जननी । माता । धात्री ।

कुण्डम् । ऊधस्यम् । स्तान्यम् । नवनीतम् । अवाङ्गिरसम् । कुम्भिटिका । आज्यस्थालिः ।

दूतज्ञः । कितवः । दण्डी । तपस्वी । दानशीलः । सत्यः । धर्मप्रधानः । ऋजवः । पुत्रवान् । धनवान् । धीमान् । सत्यवान् । बुद्धिमान् । रङ्गावतारि । पाषण्डो[2] । कुग्कुत । विकलेन्द्रियः । कर्मेन्द्रियः । पतितप्तः । अर्थसन्धः । रिपुः । शत्रुः । अरातिः । चौरः । तस्करः । साहासिकः । आरामिकः ।

दरी । गुहा । गोहरी । कण्ठमात्रा । तटकटधारा । कोटिधारा । धरः । सौत्यम् । रन्ध्रम् । पुरन्ध्रम् । नड्वला । पल्वला । अवरोधम् ।

घनम् । पीवरम् । कठोरम् । निविडम् । गुडः । पृथुः । बृहन् । उच्चैः । महान् । आरम् । अशोचम् ।

गन्धम् । सुगन्धिः । सौरभम् । पूषणम् । पूरणम् । निर्भरम् । सुभरम् ।

भवनम् । दारुभवनम् । हृदभवनम् । सुरतभवनम् । निशाभवनम् ।

कथनम् । जल्पम् । भणितम् । भणितिः । भणिः । झङ्कारः । भावः । कङ्कारः[3] । स्थालम् । पूर्णम् । वागुरः । वार्तारिकाः ।

---

१ 'अकुः' क. पाठः । २ 'पाखण्डी' क. पाठः । ३ 'झङ्कारः' क. पाठः ।

शलभाः । शुकाः । मित्तिरयः । आरात्रिकडुकम् । कलशम् । दीपम् । स्थालिः । अङ्कारेवृषः[1] । भरसहः । भारसहः । उष्ट्रः । उरभ्रः । कर्पटम् । नीचः । कर्ममृ । अजिनम् । वारिवारणम् । रणङ्कटम् । अवटम् । घटम् । पटम् । कटम् । शकटम् । तटम् । करपात्रम् । वादित्रम् । सुत्रा । सैरन्ध्री । दरी । सञ्चयम् । जभ्झरीपेफेटम्[2] । रङ्कनम् । गोरम् । कुङ्मलम्[3] । शुभ्रम् । अभ्रम् । तत्रम् । बभ्रुः । पिङ्गम् । पिञ्जरम् । कन्दरा । कुकाटिका । कुन्दुरम्[4] । चतुरङ्गम् । चतुरङ्गलीला । अच्चः । पञ्जरगम् । द्विष्टी । त्रिहडम् । पुंचीनः । पवनी । कवरी ।

दशसूना समो चक्री दशचक्रसमो ध्वजी ।
दशध्वजिसमा वेश्या दशवेश्यासमो नृपः ॥ १ ॥
दशानां च सहस्राणां यो वा(ह)यति तद्धुरम् ।
सा सूना सौनिको ज्ञेयो ब्रह्महारी समुग्विभुः ॥ २ ॥
तैलचक्रसहस्राणां द्वादशानां च योऽधिपः ।
तस्य यच्च मुखं पश्येत्स तैलवणिजां पतिः ॥ ३ ॥
भैरवं येन विक्रीतं मिश्रितं वा जलेन तु ।
मधुजी रौरवं गच्छेत्सदा संवत्सरत्रयम् ॥ ४ ॥
उत्तमाः शक्रयो ज्ञेयाः कुलकौलरतेषु च ।
पणां नीत्वा परं यान्ति पाकपुण्यस्त्रियः स्मृताः ॥ ५ ॥

१ 'युङ्कारे' क, पाठः । २ 'पेभटम्' क. पाठः । ३ 'कुल्मलं' क. पाठः । ४ 'कुन्द्' क. पाठः ।

साधुभ्यो यो धनं ग्राह्येदसाधुभ्यः प्रयच्छति ।
स राजा नारकी ज्ञेयः शुद्धस्तद्[1]हितो नृपः ॥ ६ ॥

भिक्षो कन्था श्लथा ते ननु शफरिवधे
जालमश्नासि मत्स्यां-
स्ते वै मद्योपदंशाः पिबसि मधु समं
वेश्यया यासि वेश्याम् ।
दत्त्वाङ्घ्रिं मूर्ध्न्यरीणां तव किमु रिपवो
येषु सन्धिं विदध्मि
चौरस्त्वं द्यूतहेतोस्त्वमसि च कितवो
नास्ति नष्टे विचारः ॥ ७ ॥

इति क्षेमेन्द्रकृते सर्वशास्त्रो[2]द्धृते
लोकप्रकाशे तृतीयः प्रकाशः ॥ ३ ॥

—※०※०※—

१ 'द्वारिता' क. पाठः। २ 'शास्त्रकथासरित्सागरे' क. पाठः।

अथ

# चतुर्थः प्रकाशः ।

अथातः संप्रवक्ष्यामि चतुर्थं लेखसङ्ग्रहम् ।
येन विज्ञातमात्रेण मूको भवति पण्डितः ॥ १ ॥
कायस्थेनोदरस्थेन मातुरामिषशङ्कया ।
अन्त्राणि किं न जग्धानि तत्र हेतुरदन्तता ॥ २ ॥
उन्मद्भिर्नमद्भिश्च च्छिद्रान्वेषणतत्परैः ।
उपस्थैरिव कायस्थैः कायस्थः को न वञ्च्यते ॥ ३ ॥
चितिं प्रज्वलितां दृष्ट्वा वैद्यो विस्मयतां ययौ ।
नाहं गतो न मद्भ्राता कस्येदं हस्तलाघवम् ॥ ४ ॥
अग्न्यागारे कुटीं कृत्वा ब्राह्मणो विगतश्रमः ।
मौसुलं तन्त्रमासाद्य ऊर्ध्वबाहुः क्षिपेत्सचित ? ॥ ५ ॥

स्थैर्ये स्थाणु राज्ञो द्वारमुद्वहति यः स राजानकः । प्रजापालनार्थमुद्वहति रक्षयति स राजस्थानीयः ॥

पतिता च प्रतिष्ठा च मुद्रिता शासिता तथा ।
चतुर्विधा सभा प्रोक्ता सभ्याश्चैव चतुर्विधाः ॥ १ ॥
प्रतिष्ठिता पुरे ग्रामे चलत्वादप्रतिष्ठिता ।
मुद्रितात्यर्थसंयुक्ता राजयुक्ता तु शासिता ॥ २ ॥

---

१ 'लोक' क.पाठः । २ 'विज्ञान' क.पाठः । ३ 'यन्त्र' ख. पाठः ।

तत्र सभायां लौकिकार्थमोहार्तिवारणं यः करोति स राजमहत्तमः ॥

नृणां षष्टिसहस्राणामधिपत्यो तथा जगुः ।
राज्ञीश्वरमुद्वहति स द्वाराधिप उच्यते ॥ १ ॥
प्रजानां परमः कंपो मोहकम्पं निवारयेत् ।
गजाङ्कं च समाख्यातं स ज्ञेयः कम्पनापतिः ॥ २ ॥
वाजिनो यत्र तत्राहं तत्राहं तत्र (यत्र) वाजिनः ।
न ते यत्र न तत्राहं नाहं यत्र न तत्र ते ॥ ३ ॥

एषां वाजिनां सहस्रसंख्यानामनीकिनीनामयुतस्य योऽधिपतिः सोऽश्वपतिः ॥

रथो गजो नराः पञ्च त्रयोऽश्वाः पत्तिरेव च ।
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ॥ १ ॥
प्रत्येकं च यदुक्तं च त्रिगुणं त्रिगुणोदयम् ।
अनीकिनीदशगुणं चाहुरक्षौहिणीं बुधाः ॥ २ ॥

तदक्षौहिणीनामयुतानां योऽधिपतिः स गजपतिः ॥

ग्रामायुतसहस्राणां पत्तनं ज्ञायते बुधैः ।
तत्रापि सारं नगरं तत्पौराः पुरवासिनः ॥ १ ॥
तेषां तु सारं यद्ग्रन्थं लक्ष्मीवन्तो नरा जगुः ।
एषां योऽधिपतिस्तत्र स ज्ञेयो नगराधिपः ॥ २ ॥
चितिं पश्यति पुत्रस्य शिलां पश्यसि खण्डिताम् ।
मन्दिराणां सहस्रस्य ग्रामाणां पञ्चसप्ततिः ? ॥ ३ ॥
विषयेष्वतिकष्टोऽयं विषयः स्त्रीति नाम यः ।
जीवत्यन्यैः किलाकृष्टस्तयाकृष्टो न जीवति ॥ ४ ॥

शब्दादयो विषयास्तथा कामक्रोधलोभादयः, तदनु ग्रामादयो बृंहनविषयो डामरो विषयः ।

कश्मीरेषु सप्तविंशतिविषयाः । ईशादिग्भागाद्यत्र खोयाश्र(हा)मी । एकेनविषयः । क्रोधनविषयः । द्वात्रिंशतिविषयः । चालनविषयः । समालाविषयः । देवसूची(र)विषयः । भृङ्गविषयः । वितस्ताविषयः । सत्रवविषयः । खरवारिविषयः । नीलाविषयः । हारीविषयः । जलहडीयविषयः । खड्गीयविषयः । फाग्वाविषयः । लहरविषयः । ओलडीयविषयः । नीलाशविषयः । एषां विषयानां ग्रामविभागो यत्र

षष्टिग्रामसहस्राणि षष्टिग्रामशतानि च ।
षष्टिर्ग्रामास्त्रयो ग्रामा ह्येतत्कश्मीरमण्डलम् ॥ १ ॥

अथान्यशास्त्राभिप्रायः—

चत्वारिंशत्तथापि पञ्च गिरिशाः षष्टिश्च चक्रायुधा
ब्रह्माणस्त्रय इत्यनादिनिधनाः क्रीडन्ति विश्वेश्वराः
नीलादीनि शतानि सप्त फणिनां तीर्थौकसां कोटयो
व्याख्याताश्च चतुर्दशोत्तमतमाः कश्मीरभूमण्डलम् ॥१

एषां विषयानां योऽधिपतिः स विषयाधिपतिः ॥

पुराङ्किताश्च ये नाम निर्मितास्त्रिपुरारिणा ।
तेषां च नगरं ग्रामं पत्तनं तत्र वासिनः ॥ १ ॥

त्रिविष्टपस्य सारं तत्पार्थिवं क्षेत्रमीश्वरम् ।
तत्रापि सारं हिमवांस्तत्र सारं सतीसरः ॥ २ ॥

---

१ 'रिंशतयापि' ख. पाठः । २ 'गिरिश' ख. पाठः ।

सती च पार्वती ज्ञेया राजा ज्ञेयो हरांशजः ।
तेन नामाङ्किता यत्र कृताश्च नगरादयः ॥ ३ ॥

तत्र पुण्ये गिरौ वणिग्वाणिज्यपण्यवाहादयः स्थिताः तेषां योऽधिपतिः । तस्मिन् हट्टे रात्रौ मुषणामारणभित्तिभेदसन्धितस्करा ये सन्धिं ददति वा मुषन्ति वा मारयन्ति एतत्संरक्षणार्थे यो रुद्ध्यति स चौरपतिः। पारमार्थिकस्तु आत्मा एव लोकस्तथा भूर्भुवः स्व इति लोकाः । भूर्लोकः, भुवो लोकः, स्वर्लोकः, महर्लोकः, जनलोकः, तपोलोकः, सत्यलोकः, इत्येवं सप्तलोकाः । एषु सप्तलोकेष्वथ निवसन्ति तेषां योऽधिपतिः स ईश्वरः । यत्र यत्र यस्मिन्विषये लोकस्य चेश्वरः तस्मिनृतौ संयतार्था गजाश्वरथपदातयः । योधोऽनीकस्य लोकानामालोकयति स लोकाधिपतिः ।

एकं दश शतं चैव सहस्रमयुतं तथा ।
लक्षं च दशलक्षं च कोटिश्च दशकोटयः ॥ १ ॥
एवं रथानामयुतं सा सेना प्रोच्यते बुधैः ।
तत्र योऽधिपतिः राजा स सेनाधिपतिर्मतः[1] ॥ २ ॥

परमादिदेवतार्चनीयतमभट्टारकमहाप्रभुश्रीमदमुकराजदेवपादः अमुकविषयस्थामुकग्रामादमुकेनामुकपुत्रेण कटारिकाहस्ते सति शिरश्चौरिकार्थे विज्ञाप्यन्ते यथेत्थम्ः—इतः प्रदेशात्सान्तर्वर्तिकाञ्चोगभूम्यादिसहिता-

---

१ 'माधि' क पाठः ।

द्रम्मसाङ्कस्थादुपात्त इति दीनारसहस्रपञ्चनवति तथा धान्यखारीसहस्रषट्क (६०००) खं गं संव्रत्यादिकस्योपरि सस्यापादीयो ग्राहकगरलाप्राणनिर्यातले वहिकवता सार्धे प्रविश्य करणपूर्वतो दुहनीयनिवर्तनीयं च तत्तस्माद्राष्ट्रसंलग्नमानग्रामगोष्ठभोगभूम्यादित्यः येतिगिजघालजूकनिर्गुटखोऽस्सरादि त्रिरवणिग्वाणिज्यसमग्रद्रङ्गपतिवास्तव्यदेशनिवासिनां यदि केनचित्कृतं तत्समेन वक्तव्यम् । अत्र धनत्रिभागस्य वा खसितग्रहणस्य द्विहनस्य संशोधनस्य च प्रतिभुवः अमुकविषयस्थादमुकग्रामीयामुकः अमुकपुत्रः तत्र ततोऽमुकोऽमुकपुत्रः अमुकग्रामादमुकोऽमुकपुत्रः मया पादानां दत्तः कुं वा हस्ते सति स्थितः पदातिर्यथा दत्तस्थितचुटकेनोपेक्षाच्छलं तं किंचित् तथा खसितग्रहणप्रस्तारिकाद्वास्तव्यहस्तात्ततो दीनारास्तत्संग्रहणीयाः विज्ञप्ताः पादाः लिखितममुकेन प्रमाणम् ॥

—:-*०*-:—

परमादिदैवताचर्नीयतमपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीमदुत्तमलोकपालसुरत्राणराजदेवपादान्तिकात्ः—अमुकप्रदेशीयराजस्थानीयामुकस्यामुकपुत्रस्य पदार्थलेखार्थं समाज्ञास्थं यथावदमुकेयविषयादेवा सच प्रदेशनिवसमानस्थितकम्पनादिपति राजानमहाश्री अमु-

१ 'नमति' ख. पाठः । २ 'घोष' ख. पाठः ।

कदेवस्य राज्ञी पुत्रकलत्रधनगोप्राणिपशुप्राणवादिशो-
धकटायनपथकपरिजनवणिग्वाणिज्य-भांपति-परिजन-
दीवरसांयात्रिककल्यपालप्रत्येकात्रिमयालवास्तव्यधृतस-
हितस्य धेयस्याज्ञाधरस्य विरुद्धस्य विरुद्धसमाश्रितप-
रिवर्जितस्य निर्दोषस्य निरपराधस्यास्माकं हितानुम-
तेन भद्र्याद्रोहतया प्रक्रम्यमानस्य तदन्वसदीय शत्रु-
गोत्रजाविरुद्धविचलितानां सार्धं विपक्षविदेयानां सार्धं
दूत्यागमाचारसञ्चारादिदूतगमागमलेखलेखहारविसृष्टप्र-
त्यमनकोहोलिकादर्शनग्रहणाधिकं सुमुखपरिमुखाभ्याम-
क्रम्यमाणस्य तत्तस्माद्राष्ट्राद्भोगान्तस्यादिकात्सान्तर्वर्ति-
काद्राणसाङ्गस्थपुरदुर्गग्रामघोषभ्यो यद्यदारुहति देया-
वदेयचारोपचारहर्गोपहारगोट(क)दीनारचतुष्कस्वदीय-
तादीनारमार्गायमार्गोत्सवदीनारात्रिस्कन्धाश्वयुजमही-
मानानिदाघापादपापभानप्रमाणशुष्कद्रङ्गराटकाधर्मासन-
न्यायाचारपथोपचाररूढास्थितधानुष्कगृहधानुष्कस्थाव-
रधानुष्कनाटिवाटिकाशिण्डिकाधानुप्रस्थामार्गरथ्यादी-
नारव्यापाराशिवाशिवदेवगृहविहाराग्रहारबालप्रबलपाथिर-
ञ्चिकसाञ्चिदीनारगोष्ठि एडलश्वपचश्मशानमण्डलिक-
भवलोत्रकापालिशैवदाहदीनारादिसमग्रजनपदादीनां
सकाशाद्यथोत्पन्नयथास्थिताशिरञ्चारिकायां परुत्परारि-
वर्षस्थितः यथोक्तवदभ्यन्तरे यद्दत्तं स्थितं तत्रोपरि-

१ 'शत्रु' क. पाठः। २ 'प्रत्येसमको' क. पाठः। ३ 'दशन' क. पाठः। ४ 'शिव' क. पाठः।

चातनादीनारसहस्रपञ्चपञ्चाशादिकेन सह तदुपर्युक्तक्रियाकारानुसारं पृथक्लिखितस्थितत्वात्सर्वस्मात् खण्डनिकायां संयोगप्रयोगदर्शैकादशसंसरणगणस्थानप्रधानदीनाराः मर्मद्वन्द्वत्र बभूवुः । एतत्तेषां सचिवकारकगम्पतिसङ्ख्येशानादानपूर्वं अस्मदीयगणनास्थानादियांततिथिष्यमाणलवाह्निकवेतालवह्निकाभिसहितं मार्गनिवर्तनं कुर्वमाणस्य नास्ति विशेषपर्यन्तं गणनानिर्वाणपूर्वमुद्वहनां कुर्वमाणस्य शठशाठ्यादिकेन दिशां परिसेवायां वा दिगन्तरयात्रायां प्रापणाय यत्र यत्र गच्छति तत्र तत्र तुल्यकालं छत्रपश्वेच्छस्त्रधृताश्वारोहपदातिसकलेन सेनामुखेन सह प्राप्यमाणस्य तत्र सागुप्तसत्यहचतुष्पत्रिकाचले चालादिपृष्ठखरिकामुखरिका सन्नाहादिभिः सुसहितेन रमणीयशब्दकञ्जाभियोगं कुर्वमाणस्यैव सतो वृहत्कार्षनाधिपतित्वात् लाभं यद्वाध्यपात्रिकं स्थितं तत्र बलाबलक्रमकेण कदाचित्केनापि प्रकारेण तत्र तस्मिन्विषये च प्रदोषे ग्रामघोषेभ्यो दुर्गाणां मस्तरप्रस्थारिको मठदेवगृहविहारचैतन्यचैत्याशिवपुरी चतुश्शालास्वधायबन्धलाभनिर्गुणादिविरंडामरकुटुम्बभोगपतिपतलाप्रासादसम्प्राप्तिराशिलोत्रवर्त्रां देवब्राह्मणानां बलाबलक्रमादिकमकुर्वमाणस्य तदनुपद्यमाणक्रमेण योऽन्तः प्रक्रमयति सोऽस्य मद्यमानक्रमणाय तच्च बृहच्चिकित्सावतां दीनारसहस्रदिव-

१ 'माणस्य' क पाठः । २ 'दिशा' क. पाठः । ३ 'डामर' क. पाठः ।

धर्मस्यायत्तम्, अवशिष्टमस्माकमायत्तम् । एवमन्तश्च सर्वक्रियायां न चलनीयम् । एवमित्यस्यार्थे मध्यस्थत्वेति प्रतिरूपे सति सचिवानां तथा कारकमहत्तमानां मुखात् स्वयं दत्तादेशात् अनेन यथादत्तस्थितशिरचीरिकायां सति प्रभूतकायां प्रवृद्धायां सत्यां तत्र च्छलच्छिद्रोपद्रवादिकं न कदाचित्करणीयं, अपि चलने सत्ये तच्चुटकमध्यस्तपादानां न किञ्चित् इति चुटकोऽयं समध्यस्तोऽयं दत्तः ॥

—=·:·❋०❋·:·=·—

परमभट्टारकमहाराजाधिराज–अमुकप्रदेशीयामुकस्थामुकदेशे निवसमानस्थितत्वात् तत्रोत्थाय पलायामतः, तदस्यागच्छमानस्य पथि पन्थाने प्रक्रम्यमाणस्य सशुभाचारतया नियसमानस्य मोषणमारणावष्टम्भादिकं स्वमुखपरमुखाभ्यां न क्रियते, अद्यारभ्य पत्तस्य मध्यस्थत्वे अमुकोऽमुकपुत्रः परिस्थापितः हस्ते सति वा बृहद्धस्तालङ्कृते सति रूपं सति सचिवानां मुखात् ॥

—:·❋०❋·:—

परमादिदैवतार्चनीय० अत्र संवत्सरे अत्र दिने अमुकविषयस्थामुकग्रामीयाहुकेनामुकपुत्रेण हस्ते सति दिव्यशपथवाक्यचीरिका अमुकविषयस्थामुकप्रदेशीयामुकं प्रति धृता । यथा अनेन तत्कार्यपुरुषाग्रेण[१] प्रतिभूः लागितः । तत्तत्र प्राप्यास्मिन्नग्रे प्राड्विवाकपण्डितसा-

१ 'ग्रेना' क. पाठः ।

धिकपुरस्थे स्त्रीयसारप्रसारेत्युदीरितोत्पन्नत्रक्रव्ये सति तदनेनोक्तं इत्यमुकक्षेत्रादमुकरूपाद्भूमिखारीपञ्चकं बला-द्गुक्तिकत्वाच्च मत्पितृप्रव्यादमुकग्रामीयादमुकसद्गृहीत्वा मूल्येन संप्राप्तस्थितमित्यर्थाच्च तच्चानेन बोधितं तस्यो-पभुञ्जमानतद्बलाच्च तेन नीतं सममिति विचार्यैतदुक्त-तया मयास्य नीतं न किञ्चिदर्थवत् . न किञ्चिदपि तत्त स्मादेतत्स्थावरं मम पित्रा तु भुक्तमिति मया वर्षत्रिंशत्प-ञ्चाशकं तावदुपभुञ्जितमेतदेवे क्रमेण शाठ्येन शठिलं आगतस्तस्मात्सर्वतो वा सर्वस्मान्ममोपभुञ्जमानस्याधि-कबलं केन हेतुना किं प्रयोगेन कथं क्रियते इति पदानि परस्परमुदीर्यामुकविषयस्यामुकनागराजदेवपादानामग्रे तत्र स्थित्या तत्राद्यविधानेन पद्यमानक्रमेण च एदोदीर-णपूर्वं शुद्धचीरिकां प्रेक्ष्य धर्मचीरिकां ललाटे गृहीत्वा सप्तपदानि गत्वा दिव्यं कर्तव्यमत्र सन्धयः वदि पञ्चम्यां वदि द्वादश्यां शुदि प्रतिपदि इत्येकेनुष्ठया मया यदि न शुद्धिःकर्षिता वा स्फोटिता वा अहं पलायगत-स्वदेवोपयुक्तं स्थावरं दत्तास्मि व्यतिक्रमादीनारसहस्रप-ञ्चकं पादो यो ग्राहकानां मार्गे दातव्यं तद्वदनेन कर्षापितस्तदा मम न वक्तव्यम् देविराजकुलिकपरस्परं प्रेक्षणीया । एवमतः क्रियया न चलनीयं । अत्र शुद्धिनिकर्षणाय दत्तप्रतिभूः अमुकग्रामादमुकोऽमुकपुत्रः

---

१ 'र्थाञ्च' क. पाठः । २ 'ललाटं' क. पाठः ।

स यस्य दत्तमनेनोक्तमहमेष यदि दग्धो वा पलायग-तस्तदुपर्युक्तवदनुपालनीयम् । अनेन तद्वच्छुद्धिमध्यस्थः अमुकविषयस्थामुकदेशीयाऽमुकोऽमुकपुत्र अनेनामुके-नामुकस्य तद्वद्दत्तः कुंसति[1] स्थितः । ऊनाधिकान्यक्षराणि प्रमाणमिति ।

आदित्यचन्द्रावनलानिलौ च
द्यौर्भूमिरापो हृदयं नल(यम)श्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये
देवो(धर्मो) हि जानाति नरस्य वृत्तम् ॥ १॥

—=-:-*०*-:-=—

परमादिदैवतार्चनीयतम–परमभट्टारकमहाराजा-धिराजपरमेश्वरचक्रवर्त्युत्तमलोकपालमहाप्रभुश्रीमदमुक-सुरस्थानराजदेवविजयराज्ये संवत्सरे अत्र दिने अमु-कविषयस्थामुकग्रामीयोऽमुकः अमुकपुत्रोऽमुकपौत्रः तथा तदीयवैवाहितभार्या राज्ञी अमुकोच्यमानामुकाया अमु-कग्रामीयामुकदुहित्र्या चेतावत्वियुतोक्तं वा हस्तवाग्भ-राभ्यामुपलक्षिते सति दक्षिणाप्रतिपादनपट्टकोऽयं ददाति यथा । अत एवामुकप्रदेशीयाग्रहारीयभट्टामुकायामुक-पुत्राय त्रिसन्ध्योपासकाय ऋग्यजुःसामाथर्ववेदपाठकाय नित्यस्नानदानदेवार्चनरताय मम मातापित्रोरुद्धरणाय ब्रह्मचारिणे सद्ब्राह्मणाय श्रीकश्मीरेषु श्रीमद्विजयेश्वर-देवपादानां पूजार्थमर्घपुष्पधूपदीपसमालभनार्थं :—

---

१ 'कुंवा' क. पाठः ।

आपः क्षीरं कुशाग्राणि तण्डुलाः सुमनास्तिलाः ।
यवाः सिद्धार्थकाश्चैतदष्टाङ्गोऽर्घः प्रकीर्तितः ॥ १ ॥

इति पूज्यपूजकाय दत्तं नियमितम् । अमुकविषयादमुकग्रामादमुकसमीपादमुकनामक्षेत्रादमुकप्रदेशीयादमुकस्थावरनिकटादमुकसमीपादमुकनामक्षेत्रात् अमुकप्रदेशीयादमुकस्थावरनिकटादमुकविषयस्थादमुकादीनां सत्कार्थान्मूलेन दीनारशतसप्तको[1]पेतसहस्रपञ्चकैर्यः सम्प्राप्तस्थितागमसञ्चालकाद्भूप्रस्थद्वादशकमस्मै दक्षिणायै दत्तं प्रतिपादितं परित्यक्तं च, एतस्योपभुज्जमानस्य ससन्तानस्यास्माभिरस्मद्वैशे[2]जने वान्यत्र केनचिद्बाधनपरिपन्थनादिकं न कार्यं । केनापि चेत्कृतं स नरकपाती स्यात्पुत्रवध्यो भवति । आचन्द्रसूर्यसमुद्रमेरुमलयपर्वतपर्यन्तं तावदहार्यं ससन्ततेर्जीवनाय प्रतिपादितपट्टकोऽयं दत्तः । उक्तं च भगवता—

हलकृष्टां महीं दद्यात्सबीजां सस्यशालिनीम् ।
यावत्सूर्यकृतालोकास्तावत्स्वर्गे महीयते ॥ १ ॥
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।
वर्षकोटिशतं चैव स्वर्गे वसति भूमिदः ॥ २ ॥
देवद्रव्यविनाशाय ब्रह्मस्वहरणाय च ।
अर्जितं कुलनाशाय स वेदात्मवधाय च ॥ ३ ॥
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकान् ॥ ४ ॥

---

१ 'कोपीतं' क. पाठः । २ 'द्वैश्य' क. पाठः ।

सुवर्णमेकं गामकां भूमेरप्येकमङ्गुलम् ।
हरन्नरकमाप्नोति यावदाभूमिसंप्लवम् ॥ ५ ॥
तटाकानां सहस्रेण अश्वमेधशतेन च ।
गवां कोटिप्रधानेन भूमिहर्ता न शुध्यति ॥ ६ ॥
अक्षिपक्ष्मपरिक्षेपक्षणक्षयिनि जीविते ।
कन्ताक्षयाक्षाक्षिपेत्क्षोणीं यस्या वाचाक्षयेऽक्षयः ? ॥७॥
तप्तायःपिण्डदण्डद्रुततरलधिकावज्रतुण्डाण्डजोच्चै-
र्व्याघातैर्भिन्नमुण्डाद्विकटकटुरटच्चण्डभृच्चण्डदूताः ।
आराध्यारात्प्रकाण्डप्रहतहुतवहाखण्डखण्डाङ्गसङ्गा-
ज्जायन्ते नारकास्ते जलधवनिकटा ये धरित्रीं हरन्ति॥८॥
भूमेर्दाता यातिलोकं सुराणां
हस्तैर्भुक्त्वा वाहमारुह्य दिव्यम् ।
तस्या हर्ता प्रज्वलत्तैलपूर्णे
लोहे कुम्भे पच्यते कालधूतैः ॥ ९ ॥
सामान्योऽयं धर्मसेतुर्नराणां
काले काले पालनीयो भवद्भिः ।
सर्वानेतान्भाविनः पार्थिवेन्द्रान्
भूयो भूयो याचते रामभद्रः ॥ १० ॥
स्वदत्तां परदत्तां वा यो हरेत वसुन्धराम् ।
[1]स्वविष्ठायां कृमिर्भूत्वा पितृभिः सह मज्जति ॥ ११ ॥
यो वारयति रोधयति वा स नरकपाती स्यात् । एवं न कश्चिदपहरणीयम् इति दक्षिणापट्टकोऽयं दत्तः ।

---

१ 'श्वविष्ठायां' क. पाठः ।

अत्र साक्षित्वे धर्माऽऽदित्यवसुमरुद्गणरुद्राः । एवममुकदेवमहाप्रभुशाहिप्रत्यक्षे लिखितं गं पत्यमुकेन ॥

—*०*०*०*—

परमभट्टारकमहाप्रभुपादान्तिकात् अमुकप्रदेशीयामुकस्य समाज्ञप्तम् । यथा अमुकदवयजनार्थं पूजोपकरणार्थं पूज्यद्रव्यादिसम्भारणार्थं अमुकव्यापारिहस्ताद्गणनाद्गृहीतलवह्निकया दीनारसहस्रपञ्चदशकं (१५०००) गणपत्यामुकमुखादिहानीत्य देयं, प्राप्तमात्रं प्रापणीयम् । लोकस्यार्थार्थमर्थकवाचकस्य सार्थासङ्गस्य च शिरोब्राह्मणक्षत्रियवैश्यशूद्रादीनां ब्राह्मणस्याङ्गाद्भेदचतुष्टयार्थं चतुर्वर्णो नियतः, क्षत्रियस्यायुधादिपरिकल्पनार्थम् । अङ्गाच्चतुर्वर्णो नियतिः, एवं षोडशवर्णाः षोडशाणां वर्णानां जातीनां एवं चतुर्धा प्रजापतिसंख्ययाश्चतुःषष्टिश्च वर्णजातयः ।

सरीसृपाः । कृमिस्थटाः । चर्मचटाः । कलविङ्काः[1] । वेङ्गाः[2] । कलिङ्गा । अङ्गाः । स्फुलिङ्गः । पलिकः । इष्टिकः । धान्याहिकाः । कापः । कुन्तकम् । अन्तकम् । पङ्कम् । सङ्गम् । रङ्गम् । पतङ्गम् । तङ्गम् । संङ्गम् । सारणिः । तरणिकः । काठिनः । जलकटाहिकः । घटं । पटं । कटं । कठं । कवाटम् । नटं । नाट्यं । जटं । घटं । नाजामुक्तं । कलापः । सिन्धुवारः । डासः[3] । छुरिका । अभिरामः । नाधासः । सापं । विवाङ्गम् । लवङ्गम् ।

१ 'ङ्काश्च' क. पाठः २ 'विङ्काः' क. पाठः । ३ 'मासः' क. पाठः ।

साङ्गाभिः । सुवर्णायकम् । सुवर्णपत्त्रिका । सुवर्ण-मुख्यम् । जारम् । रजकः । कुण्डम् । कुलवत्रकम् । कुमारः । स्फुरम् । सिकतालुम्[1] । नीवस्कम्[2] । साराणिः । सारविक्रम् । स्फुरन्ती । रन्ता । परसारसञ्चयम् । स्थिरशाश्मने । द्रूपातनम् । सदोलकम् । तपोलकम् । सोलकम् । वाकोलकम् । कवाटिः । वारिधानी । वारिधरः । वारिवारणम् । वारिकरणम् । वारिकरं । वारिका । वारिघं । वारिणं । वारिभं । वारिवारी । वारिपा । देविरामः । सुरापः । रामः । रमणः । रंरारमणः । ऋतुपदं । ऋतुकालं । ऋतुपवनम् । रदायकं । ऋतूत्थं । ऋणम् । ऋतुरामं । स्वार्थम् । स्वाङ्गम् । स्वागयम् । स्वात्मीयकम् । स्वानिका । पवनः । पादनः । पावनः । पूसूनिकः । सूरिः । सारणिः । सारम् । सदनम् । सोदनम् । पिण्डी । गण्डाङ्ककतिवम् । आधानम् । स्वाङ्गम् । रङ्गम् । सारम् । सारोवनम् । सैरङ्गं । भृङ्गं[3] । भारवनम् । भारकाननम् । सयत्तातातम् । तुरङ्गकम् । तरणिः । तावकम् । सामकम् । तत्तुष्करः । चतुष्कम् । गिरः । पैतम् । पितृतम् । लिङ्गम् । वृत्तायुधम् । ह्रदम् । पयः । जालम् । सङ्गमम् । चतुरम् । चतुष्कयम् । उग्रदेशे ऋतनाधिपितृवनम लिङ्गवृत्तायुधे । ह्रद-जलसङ्गमम् । चत्वरोग्रदेशात् ।

---

१ 'सिकता' क. पाठः । २ 'ताव' क. पाठः । ३ 'तुङ्गं' क. पाठः ।

( शिवयामले—

शिवपितृवनमेकलिङ्गवृत्तो-
ऽद्भवजलसङ्गमचत्वरे सुदेशे ।)
अपि शिवगदितं विमुच्य शस्तं
निजगृह एव हि पूजनं मुमुक्षोः ॥ १ ॥

—-*०*०*-—

लेखपञ्चाशते[1] भूर्जे सङ्ग्रहे गणनामते ।
पदैर्नानाविधैर्लोकप्रकाशे[2] यदुदीरितम् ॥ १ ॥
दिविराणां लिपिज्ञाने गणाध्यक्षे महाविधौ ।
शास्त्रे सारस्वते सांख्ये दैवज्ञे ज्ञाननिर्भरे ॥ २ ॥
पुराणतर्कमीमांसावेदशास्त्रेषु चोदितम् ।
बोधये चाधिके भूर्जे पद्धतौ यदुदाहृतम् ॥ ३ ॥
एवमादिषु[3] शास्त्रेषु तेषु यद्यत्प्रकाशितम् ।
तदहं कीर्तयिष्यामि श्रुत्वा चैवावधारय ॥ ४ ॥
येन विज्ञातमात्रेण सर्वज्ञत्वं प्रपद्यते ।
सारात्सारतरं वच्मि दध्नो घृतमिवोद्धृतम् ॥ ५ ॥
दिव्यं चक्षुः समाकीर्णं पश्यते सचराचरम् ।
परं बोधसुपारं च सर्वविज्ञानमुत्तमम् ॥ ६ ॥
पश्यते दिव्यदृष्ट्या च सर्वं त्रिभुवनोदयम् ।
एतज्ज्ञातेन भूर्जेन सर्वशास्त्राणि लेखयेत् ॥ ७ ॥
पश्यते सर्वशास्त्राणि लिखित्वा भूर्जसङ्ग्रहम् ।
शास्त्रं पूर्वकथाम्नाये संक्षेपात्कथयाम्यहम् ॥ ८ ॥

१ 'लेख्य' क. पाठः । २ सदैर्नाना' क. पाठः । ३ 'मादिमहा-शास्त्रे' क. पाठः ।

किं कृतं सीतया सार्धमत्रैवोत्तरमीरितम् ॥ ६ ॥
तरत्तरलसेनाभं तेन व्याप्तमिदं जगत् ।
वर्णान्येकोनपञ्चाशद्यस्मिंश्चक्रे व्यवस्थितिः ॥ ७ ॥
तैस्तु व्याप्तमिदं सर्वमक्षराक्षरपङ्क्तिभिः ।
शास्त्रे मन्त्रे च भूर्जे च उत्पन्नं मातृमण्डलम् ॥ ८ ॥
भूर्जेन धनसम्पत्तिस्तदर्थं सर्वकर्मकृत् ।
अर्थेनोपार्जितेनैव गुरुदेवाग्नितर्पणम् ॥ ९ ॥
देव्यग्निस्तुष्टो भाग्यानि पक्षे सद्गुरुसेवनम् ।
इत्थं गुरुतरं भूर्जमिहामुत्र व्यवस्थितम् ॥ १० ॥
येन विज्ञातमात्रेण सुखं जीवति मानवः ।
भूर्जाधीनाः प्रजाः सर्वा राज्ञां वै भूर्जलोचनम् ॥ ११ ॥
तच्च कायस्थितं यस्य तं कायस्थं जगुर्बुधाः ।
अज्ञाने तु यथा ज्ञानं प्रकाश सर्वजन्तुषु ॥ १२ ॥
तथा भूर्जं पृथिव्यां च सङ्ग्रहे सर्वजन्तुषु ।

अथ कालकलना[2] कथ्यते :—

आद्यक्षरं समुच्चार्य तावच्च निमिषः स्मृतः ।
निमिषद्वयेन त्रुटिर्लवः स्यात्त्रुटिकाद्वयम् ॥ १ ॥
षष्टिस्तु चषकाश्चैव घटिका समुदाहृता ।
घटिकाद्वयसम्भूतो मुहूर्तः स्यात्तथैव च ॥ २ ॥
त्रिंशन्मुहूर्तकं चैवमहोरात्रमुदाहृतम् ।
पञ्चदश ह्यहोरात्राण्याहुः पक्षं सितासितम् ॥ ३ ॥
पक्षद्वयेन मासस्तु ऋतुर्मासद्वयेन तु ।

---

१ 'स्वर्ग' क. पाठः । २ 'करणा' ख. पाठः ।

ऋतुत्रयेणायनं स्यात्संवत्सरोऽयनद्वयम् ॥ ४ ॥
एतत्सुराणां दिवसं प्रोक्तं श्रीच्छुरिकामते ।
अहोरात्रमथो [illegible]द्रादीनां तथैव च ॥ ५ ॥
द्वात्रिंशत्तु सहस्राणि लक्षैश्चतुष्प्रमाणकैः ।
प्रोक्तं कलियुगं चैव द्विगुणं द्वापरं तथा ॥ ६ ॥
त्रिगुणं च तथा त्रेता कृतयुगं चतुर्गुणम् ।
चतुर्युगैकसप्तत्या मन्वन्तरं जगुर्बुधाः ॥ ७ ॥
मन्वन्तरप्रमाणेन दिनमेकं तु ब्रह्मणः ।
ब्रह्मणोऽनन्तरं विष्णोः केशवाख्यस्य सुव्रत ॥ ८ ॥
केशवानन्तरं रुद्रो रुद्रस्यान्ते महेश्वरः ।
सदाशिवस्तु तस्यान्ते भुङ्क्ते माया ह्यतःपरम् ॥ ९ ॥
इत्थं संवत्सरं प्रोक्तः देवादीनां सुरेषु च ।
अत्र संवत्सरे पक्षे तिथयः समुदाहृताः ॥ १० ॥
प्राक्प्रतिपद्वादितो द्वितीयायामथ द्विधा ।
गिरिकन्या तृतीयायां चतुर्थीमायुधान्यपि ॥ ११ ॥
पञ्चमीं तु शरः प्रोक्तो षष्ठीं भौमाधिपीं जगुः ।
तथा चाषाढसप्तमीं चामुण्डा बृहदष्टमीम् ॥ १२ ॥
महानवमीं समयां दशम्यां यामतःपरम् ।
एकादशीं वैष्णवीं च इन्द्रं च द्वादशीं विदुः ॥ १३ ॥
त्रयोदशीं चतुर्दशीं शिवस्य परमात्मनः ।
पौर्णमासी ह्यमावसी तिथयः समुदाहृताः ॥ १४ ॥
मार्गशीर्षादिमासेषु शुक्लपक्षादयः स्मृताः ।
वसन्तादिक्रमेणैव ऋतवः समुदाहृताः ॥ १५ ॥

रविश्चन्द्रस्तथा भौमो बुधो गुरुस्तथैव च ।
शुक्रः सौरिर्ग्रहाणां च वाराः स्वस्वोदये स्मृताः ।। १६।।
अनन्तरं ह्यत्र दिने ह्यागमानां यथाविधि ।
विष्टिस्तु परमा शक्तिः शनिः साक्षात्सदाशिवः ।। १७।।
रात्रिशक्तिसमुद्भूता दिवसो भैरवः स्वयम् ।
वेदान्तिके यथा वेदा यद्यत्कर्म तु लेखकाः ।। १८ ।।
तत्तत्सर्वं तथा कुर्याद्रात्रौ नैव च नैव च ।
स्वीकृतान्यत्र माणानि प्रमाणानामुदाहृतम् ।। १९ ।।
तस्मात्सर्वप्रयत्नेन लेखनीयं न पण्डितैः ।
तथा चोक्तं भगवता ह्यागमेऽपि यथार्थतः ।। २० ।।
विषयेष्वतिकष्टाब्दे विषया पार्थिवाः स्थिताः ।
तस्मात्किञ्चिदागमोक्त्या कश्मीरेषूच्यते किल ।। २१।।
त्रिविष्टपस्य सारं तत्पार्थिवं चेत्त्रैश्वरम् ।
तत्रापि सारं हिमवांस्तत्र सारं सतीसरः ।। २२ ।।
सती च पार्वती ज्ञेया राजा ज्ञेयो हरांशजः ।
तत्राधिपत्यमासाद्य चक्रवर्तिपदे स्थितिः ।। २३ ।।

अथेदानीं विषयानां कलनाप्युच्यतेः—

किल खोयाश्रमिकादारभ्य[1] एकेनविषयस्तथा । कौबेर्यां प्राच्यां प्रतीच्यां अमङ्गर्यां प्रतीपाद्या प्रावृष्ट्याद्यम् । प्रोख्यं । प्रेख्यं । स्नोन्मत्तोयम् । सौमानेयम् । सौदम् । साम । सांराज्यं । मुद्रासिद्धान्तम् । सौरभेयम् । सैंहिकेयम् । सिद्धा सिक्कम् । सोदरे

---

१. 'खांश्रामि' क. पाठः ।

सुवर्चसम् । सोमम् । सोमपम् । पानमनाक् । नाकम् । आवापनम् । सारतरम् । शाननम् । विद्युत् । अनङ्गकम् । सारङ्गकम् । षणा शल्यमस्ति । पिण्डापुत्रैविज्ञायेति । यतः परं रामणी स्वात्म्यं हस्ताहेत्वलिकः स्वान्या स्वारादी वैणवीणावादित्रकाः स्वरास्वरादीयस्वरूपमाह । यथा वदति हीनः स्यान्निवृत्तं वैराग्यम् । वैनतेयम् । सुवर्णपुच्छम् । विराजं । राजमानं । वैराज्यम् । विवाहिकम् । वैहं । वागुरिका । सारीसुरवृत्तं । सुन्दरिसुषाणम् । सुजनम् । सागसागरम् । कपटिका । कुन्तम् । कुलिशम् । कुत्सितम् । कुशूलिनम् । कुचैलिनम् । काकवृत्तम् । कारीयम् । कावीरम् । कुमुदिनी । कुन्तार्णम् । कलिकार्णम् । कारागृहम् । बन्धनालयम् । कालवृत्तम् । कुलजम् । काश्मीरम् । कश्मीरजन्म । वागुकुलम् । वादीवर्षवृषस्कन्दं । मन्दं । वराहादर्शनम् । सारात्पारम् । वृत्रहनम् । वृषवृत्रतदाहवी । वृत्तम् । आज्यम् । घुषशिवादाराकारं । सारं । वारणं । सावदानं । वृन्दं । वृन्दारकं । रागं । वटवृत्तवृन्दं । वृहद्भट्टारकम् । नालं । सालं । सादारणम् । वृत्त । सुषेणं । एषां सप्तविंशतिविषयाणां अन्तरालोपवेषणकः । यत्रः—

खोयाश्रमिकादारभ्य कामराजं स्मृतं बुधैः ।
वातूललहरान्तं च नगरैः परिवारितः ॥ १ ॥
मध्यं मराजमित्युक्तं ग्रामपञ्चसहस्रकम् ।

---

१ 'वामूल' ख. पाठः ।

श्रीवन्तकादथारभ्य मनुवान्तं स्मृतं बुधैः ॥ २ ॥
मनुवाराजमित्यूचुः पूतनात्कथ्यते किल ।
सतीसरसि ग्रामाणां यत्प्रमाणमुदीरितम् ॥ ३ ॥
षष्टिग्रामसहस्राणि षष्टिग्रामशतानि च ।
षष्टिर्ग्रामास्त्रयो ग्रामा ह्येतत्कश्मीरमण्डलम् ॥ ४ ॥

अर्कं समुपताकीक्रान्तं सारमणं विप्रीतार्कं विस्तीर्यं तमाद्यायेयं पादुकेयं अर्पीयं प्रस्थमुद्ध्रणमुदधिः वापी प्रतापपुरवासिनमस्तीत्यत्र विहस्तमङ्गलः । वारणः । हस्तिनः । सिंहः । केसरी । हरिः । मृगः । मृगाधिपः । वाणीवाकरकोठं । पालकीवास्थरणम् । व्यक्तम् । अङ्कस्थमङ्कं । रङ्गं । स्वामीश्वराधिपत्याधिपतिकाः । प्रहरणं । प्राप्या । तत्पादम् । पाकेयम् । दुरिधाप्रशमनं । चारोदधिश्च स्त्री स्वामी । स्वरी । स्वाधीः । स्वल्पप्रसाधारीकः । परिवारचित्तनिग्रहं । हारहराविहारादिकं । स्वामी । सुतोऽर्भकः । खट्वाली । लीला । कोलिका । मुक्तावली । हृदिवारिका । धान्यकच्यका । कन्दुकधवारणं । स्फारणं । स्फुटं । सारं । सरं । सारमादितं । वारिधारीविस्थारणं । स्थालं । सालं । मुलहरणं । सर्णारीयं । साहसारसं । सुशूलिनी । स्त्री स्त्रैण्यं । स्त्र्यैयत्वं । स्त्रीरालेयं । स्त्रीवृत्तेयं । स्त्रीनूरागेयं । वर्षाभूः । पुनर्भूः । पुनरत्रार्थं । शब्दादिधर्मतत्त्वज्ञं च । गणनाकुशलौ शुची नानालिपिज्ञौ

१ 'शिथिज्ञौ' ख. पाठः ।

कर्तव्यौ राज्ञा गणकलेखकौ । लेखोऽयं प्रकारम् । लेख्यं । लौलेयं । लेख्यं लोकपदेदां । लोकानुत्तरं । लोकाकारं । लोलाख्यं । लेख्यहारोऽयम् । लेख्य-साद्धनं । षडङ्गेयं षडङ्गं । षण्णां षडध्वा । षोडसारं । षडरं । षष्टीष्टं । षडाङ्गारं । शासनं । साद्धकोऽयं । सोर्चनामं । सार्वभौमोऽयं । सारसिकः । साननिकः । सारकः । सारासारीयं । सौपर्णं । पाठीनः । पाठी । पाठनी । पाठकः । पाठनीकः । पौठीनः । पौरुषः । प्राकृतिः । प्राकृतेयम् । प्रावृत्तान्तं । प्रोन्मत्तेयम् । प्रोवाचकः । वाचीकाकाराः । सामिः । सर्वं । सान्तरम् ॥

यस्य संपुटिका नास्ति पिता यस्य न पण्डितः ।
........................................................... ॥ १ ॥

आचार्यत्वमधःकृतं कुरचनाधुर्यैः क्रियाब्राह्मणै-
मूर्खैर्नापितचेटकैरपि महावैद्यत्वदर्पः धृतः ।
सारङ्गैश्च महातपस्विपदवीं ज्योतिर्गणप्रक्रिया
मीनैप्राणहरैरहो महदिदं माहात्म्यमुग्रं कलेः ॥ २॥

सपापा सपापं द्व........सादत्वग्रभयः । (?)
यस्यैतानि न विद्यन्ते सगुरुर्भवमोचकः ॥ ३ ॥

दीनारमेकोऽस्ति ममेन्दुवक्त्रे !
कथापटप्रान्तसुबद्धबद्धम् ।
उपार्जितोऽयं बहुभिः प्रयत्नै-
स्तदेवमर्धेन कुरु प्रसादम् ॥ ४ ॥

यस्य देवस्य यो धर्मः प्रवृत्तिः सार्वलौकिकी ।

---

१ 'मेण' ख. पाठः। २ 'मोदकः' ख. पाठः ।

श्रुतिस्मृतिविरुद्धोऽपि देवदृष्टिः स उच्यते ॥ ४ ॥
धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतोऽवधीत्[1] ॥ ५ ॥
विप्रो धर्मद्रुमस्यादौ स्कन्धशाखा महीपतिः ।
सचिवाः पत्रपुष्पाणि फलं न्यायस्य पालनम् ॥ ६ ॥

अथ साक्षिणः :—

तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ।
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ॥ १ ॥
त्र्यवराः[2] साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः ।
स्त्रीबालवृद्धकितव–मत्तोन्मत्ताभिशस्तकाः[3] ॥ २ ॥
रङ्गावतारिपाषाण्डिकूटकृ[4]द्विकलेन्द्रियाः ।
पतितास्[5]प्तार्थसम्बन्धि–सहायरिपुतस्कराः ॥ ३ ॥
साहसी दृष्ट[6]दोषश्च निर्धूतश्चे[7]ति साक्षिणः ।
उभयानुमतः साक्षी भवत्येको[8]ऽपि धर्मवित् ॥ ४ ॥
सर्वः[9] साक्षीसंग्रहणे चौर्यपारुष्यसाहसे ।
वृषो हि भगवान् धर्म अतः कोऽप्यगतेष्यलम् ॥ ५ ॥
वृषभं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ।
वरं वाराणसीखण्डमण्डनोदरपूरणम् ॥ ६ ॥
नतु ब्रह्माण्डखण्डेऽस्मिन्साम्राज्यं दोर्दण्डमण्डितम् ।

---

१ 'ऽब्रवीत्' ख. पाठः । २ 'त्रिपुराः' ख. पाठः । ३ 'त्ताभिषक्तथा' ख. पाठः । ४ 'रूपकृ' ख. पाठः । ५ 'सर्व' ख. पाठः । ६ 'कृष्ट' ख. पाठः । ७ 'निर्मितश्चेति' ख. पाठः । ८ 'भवेद्को' ख. पाठः । ९ 'सर्वसाक्षी संग्रहण सर्वे' ख. पाठः ।

ब्राह्मणस्य सुवर्णमयूखभित्तिर्योजनकोटिरेका यत्र नगरे अनेकविलासिनः सन्ति नानारूपधराश्च। योजनकोटिविभागः (१००००००)।

अत्रोपरि कालाग्निरुद्रस्य नानाघोरचण्डज्वालामहावृताः शिखायोजनकोटयो दश, यत्र तेजोमया अणवः सन्ति। योजनानां विभागोऽयं (१०००००००)।

अत्रोपरि कालाग्निरुद्रस्य भुवनं योजनकोटिर्यत्र परिवारयुता देवः साक्षात्स्थितः स्वयं तत्र। योजनकोटिविभागः (१००००००)।

अत्रोपरि शिखानां धूमनयोजनकोटयः पञ्च। विभागोऽयं विद्यते ५००००००।

अत्रोपरि नरकावनिः यत्र प्रागुक्तकाः सपापकर्मसम्बन्धहेतुना मनुष्याः क्रोशं कुर्वन्तः स्थितास्तत्र योजनकोटयो द्वात्रिंशतिः (३२००००००)।

अत्रोपरि योजनैश्च कूष्माण्डरुद्रस्य भुवनं, यत्र देवः साक्षात्कूष्माण्डरुद्रो भगवान्भूतभावनस्थितिर्योजनलक्षाणि नवनवतिः (९९०००००)।

अत्रोपरि रसातलं नाम पातालं, यत्रानन्ताख्याः फणेश्वरदेवाः सन्ति। योजनसहस्राणि दश (१००००)।

अत्रोपरि विशालाख्यं नाम पातालं, यत्रानेकविषयाः सन्ति, रम्यरम्यतरा देवदेवपत्न्याः सन्ति योजनसहस्राणि दश (१००००)।

अत्रोपर्यशालाख्यं नाम पातालं, यत्र समन्ताच्छुभ्रद्युतिदेवासुरदेवताधिष्ठितस्वरूपाः चैतन्यात्रिफञ्जप्रभापिञ्जरा रमन्ति। योजनसहस्राणि दश (१००००)।

अत्रोपर्यपयशालाख्यं नाम पातालं, यत्रानेकरचनावन्तः सन्तो भवन्ति। योजनसहस्राणि दश १०००० ।

अत्रोपरि मण्डलाख्यं नाम पातालमनेकरत्नविच्छित्तिपातालपौरुषीयुतं, यत्र भवनगोश्वप्रभासितं भुवनत्रयं, योजनसहस्राणि दश (१००००)।

अत्रोपरि पातालाख्यं नाम पातालं यत्र लग्नसंवलितपादकीवतारसंचारकिरातपतेः, यत्र योजनसहस्राणि दश प्रमाणं, हाटकमयसमारम्भसारम्भस्वतालविगलितानेकविचित्रचैतन्यस्वरूपाविश्वव्यापी भगवान् हाटकेश्वरदेवता स्थितः भुवनेऽस्मिन्प्रमाणमित्याहुः, (१००००) ।

अत्रोपरि भूमेः कम्पनिकायोजनसहस्राणि विंशतिः। परिमाणम् (२००००) ।

अत्रोपरि जम्बुद्वीपं योजनसहस्राणि पञ्च, परितो दिग्विदिशाश्चतुर्गुणस्थाः। यत्र मध्ये मेरुः स्थितः। जम्बुद्वीपपरिमाणं योजनानि (५०००) ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | | | | शि | | | | |
| | | | स | ह्र | स | | | |
| | | ङ्क | १६ | १ | २ | च्छे | | |
| | ६ | १० | ९ | १० | १० | १६ | ६ | |
| ६ | ७ | ८ | ६ | १० | १६ | ९ | १० | ६ |
| | ८ | १ | २ | शि | स | ६ | ११ | |
| | | ५ | ९ | १ | ६ | १ | | |
| | | | ० | १ | ९ | | | |
| | | | | सि | | | | |

मेरुपर्वतपरिमाणम् ।

ततः क्षारसमुद्रपरिमाणं योजनसहस्राणि दश, यत्र शैवालविद्रुमकम्ब्वाकुलिते शङ्खरत्ननानाविधं जलमकराकारं तरलिततारहाराभरणं भवति । योजनपरिमाणम्, (१००००) ।

तत्परतः शाकलद्वीपं तत्र अन्तिकोल्लासितयोजनलक्षद्वयं इति परिमाणम्, (२०००००) ।

ततः क्षीरसमुद्रो वर्तुलभुवनाकारं । प्रमाणं योजनलक्षद्वयं (२०००००) ।

ततः कुशद्वीपं योजनलक्षचतुष्टयं परिमाणमिति (४०००००) ।

१ 'अत्र (१) संख्या ख. पुस्तके वर्तते' ।

ततो दधिसमुद्रो योजनचतुष्टयमिति परिमाणं, यत्रानेकप्राणिनः सन्ति देवेन्द्राभाः सागराम्बरविश्वरूपचाराः सन्ति । कलनया यो० (४०००) ।

तत्परितः क्रौंचद्वीपो योजनलक्षाष्टकमिति देवेन्द्रसदृशजनाः सप्त, तत्र सर्वैः कालकल्पना कैश्चिदुज्झिता । यो० (८०००००) ।

ततो घृतसमुद्रो योजनलक्षाष्टकं परिमाणं, यत्र जगदाप्यायकं हिमकरनिकरहरहसितासितच्छदच्छविप्रदीप्ततेजोराशिवन्तः स्थितास्तिष्ठन्ति । यो० (८०००००) ।

ततः शाल्मलिद्वीपः योजनलक्षषोडशकं, यत्रानेकविच्छित्तिवैमानिकं प्रभावाप्रभावमानवधर्माप्तिरताः यत्र स्वभावात्परिपूरितदिगन्तरा इत्येव प्रकरणम् । यो० (१६०००००) ।

ततः शार्करद्वीपपरिमाणं, यत्र योजनलक्षषोडशकम् । अत्रासि न्छर्करोदकस्वादयुतैकपादभिषग्गारिशातकलक्षवाः द्रौणपौरुषिकाण्डकालवृन्दवन्दितपादपद्मुरासवक्रयकरणप्रमाणं । यो० (१६०००००) ।

ततो गोमेदाख्यो पवनयोजनलक्षद्वात्रिंशतिप्रमाणमित्याहुः (३२०००००) । तत्परतो मधुसमुद्राः योजनलक्षाणि द्वात्रिंशतिमयत्वात् ।

परामृतसमुद्भूता कला सप्तादशी परा [?] ।
महाभैरवतेजस्वी तत्कालगलितामृतम् ॥ १ ॥

तन्मध्यं देवदेवेशि तद्रत्नेषु समुद्भवम् ।
तस्माद्गृहाज्जातमेवं सर्वामरतदेवताः ॥ २ ॥

वल्लभाप्यायकोदम् रूपेण स्थितं तत्र तन्मध्यं, यो० (३२०००००)।

ततः पुष्करद्वीपो योजनलक्षाणि चतुःषष्टिप्रमाणमिति । यत्र पुष्करपरमेश्वरतन्त्रे सारावल्यां संवादेन गुञ्जुम्भयन्ते सर्वे पुष्कराः, यत्रानन्तजन्तवो विविधाः सन्ति। तत्र स्थले नानारूपधराः परा धरित्रीवराः वैदित्रधात्रैकरधना निषङ्गाः। यो० (६४०००००,।

ततः मादुदकसमुद्रो योजनलक्षचतुःषष्टिकलनया भवत्येतद् । यद्यत्र सुस्वादूदकाः दुर्विदोषपारिष्कराः यदुत्तरान्तरासितप्रभारञ्जितकटाक्षदीक्षिताः परिभवन्ति । योजन परिमाणम् (६४०००००) ।

ततो हेममयी भूमिर्यत्र मेरुसमप्रभा ।
उत्तप्ता भास्वराकारा तप्तसौवर्णसच्छिखा ॥ १ ॥

शैलेयसन्निभाः स्वभावभुवनप्रभाहर्म्यवातायनप्रभृतयः, मयूखनखरपुरोदितपतिपीकरीकृतनखांशुमालावलीपिञ्जरं सञ्चयीकृतप्रवालसञ्चयवल्लालितखेचरीप्रभातलमित्यर्थः । योजनलक्षाणि (२००००००)

ततो लोकालोकपर्वतः योजनसहस्राणि दशकमत्र सप्ताश्वरथवाहनो रविरुदेति पर्येति, सहस्ररश्मिप्रभापुञ्जपिञ्जरित, सुरासुरवन्दितपादपद्माभ्युदयस्वरूपपरिभूषितपादयुगलललितसद्वंशमणिप्रदीप्ततडित्प्ररोहपरिपी-

वरीभूतनखांशुमौलिजयंति । यो० [१००००] ।

तत्परतस्तमोमयभूमियोजनकोटिपञ्चत्रिंशल्लक्षाणि एकोनविंशतिसहस्राणि चत्वारिंशतिः यत्रानेकस्वयंप्रकाशेन सञ्चरन्ति परमेश्वरमर्चयन्ति ३५-१९०४० । अस्मिन्स्वयंगर्भे स्थितिः ह य० [४७०००००] कटाहयोजनकोटिरेका [१००००००००] । एवं पृथिवीपतिपरिमाणम् यो० [५००००००००] इति भूर्लोकस्य परिमाणम् ।

अत्रोपरि भुवोलोकस्य मेघानां योजनलक्षमेकं यत्रानेकशरीरवन्तो विद्यन्ते च [१०००००] । अत्रोपरि वायुपथयोजनसहस्रदशकमिति प्रमाणं, शम्भुर्यत्रानेकजगदाप्यायनकनकनिकरहारहसितसिदच्छदच्छविपूर्णामृतरससाम्राज्यसुन्दराङ्गा यत्र [१००००००] । अत्रोपरि भौममण्डलस्य चन्द्रयक्षायोजनदशसहस्रपरिमाणमिति अन्यच्च शिष्टं पूर्ववत् [१००००] । अत्रोपरि बुधमण्डलस्य योजनसहस्राणि दश, यत्रानेकसोमाति सौम्यग्रहगृहवर्तिनः सन्तः सन्ति परमरूपधारिणस्तेऽप्युक्ताः किल यत्र [१००००] । अत्रोपरि बृहस्पतिमण्डलस्य योजनसहस्रदशसङ्ख्याप्रमाणं, यत्रानेकशास्त्रविषयः सन्त्यत्र निश्चयः यो० (१००००) । अत्रोपरि शुक्रमण्डलस्य योजनसहस्राणि दश संख्याप्रमाणं [१००००] । अत्रोपरि शनैश्चरमण्डलस्य योजनसहस्राणि दश परिमाणं, यत्रानेकजनपदनिष्ठितस्थितनासिस्मर-

ज्वरजननाम्रवेत् यो० [१००००]। अत्रोपरि सप्तर्षिमण्डलस्य योजनलक्षाष्टादशकं, यत्र

मनुगौतमसंवर्तविष्णुच्यवनकश्यपाः।
पितामहोऽङ्गिरो दक्षो यमापस्तम्बदेवलाः॥ १॥
बुधबौधायनव्यासवसिष्ठजमदग्नयः।
लिखितच्छागलेयात्रिविश्वामित्रमरीचयः॥ २॥
सोमनारदहारीतयाज्ञवल्क्यप्रचेतसः।
कात्यायनोऽथ जाबालिः पैठीनसिसुमन्तवः॥ ३॥

एते महर्षय अत्र निवसन्ति, तस्य यो० [१८०००००]। अत्रोपरि ध्रुवमण्डलस्य योजनसङ्ख्यापरिमाणमस्त्येति लक्षमेकं [१०००००]। अतः परमिन्द्रस्य राज्यं योजनसहस्रनवत्यादिलक्षमेकपञ्चाशतिः एतद्द्युवोलोकस्य परिमाणं, यत्र त्रयस्त्रिंशद्देवकोटयो नानावैद्यानुरूपाः सन्ति। यो० [५१६००००]।

अत्रोपरि स्वर्लोकस्य योजनकोटिरेका, यत्र ब्रह्माद्या देवाः सन्ति, तत्राध्ययनऋग्यजुःसामाथर्वाणां वेदः पाठका ये ये ज्ञानवर्तिनः सन्तः सन्ति यो० [१००००००]।

अत्रोपरि महर्लोकस्य योजनकोटिचतुष्टयं यत्र विष्णुलोकं विख्यातं, यत्रेन्द्रनीलमरकतमणिनिभं भरितवाद्यकश्रुतस्थानानि वैचित्त्रवन्तः सन्ति। प्रमाणं यो० [४००००००००]।

अत्रोपरि जनलोकस्य परिमाणं योजनकोटिषोडशकं, यत्र देवो रुद्रः स्वयंप्रभुरेकरुद्रकोटीपरिवृतः। ततो योजनको० (१६००००००)।

अत्रोपरि तपोलोकस्य परिमाणं योजनकोटिद्वात्रिंशतिः, यत्र सदाशिवः साक्षाद्रूपी शिवः शान्तिः स्वेच्छाचारी स्वयंस्थितः। अत्र योजनसंख्याको० (३२००००००)।

अत्रोपरि सत्यलोकस्य परिमाणं योजनकोटिरेका, यत्र दण्डपाणी रुद्रः साक्षात्स्थितः यत्र यदूर्ध्वदण्डेन पुण्यशालिनां जन्तूनां द्वारमुद्घाटयति। यत्र योजनको० (१००००००)।

एवमेतद्ब्राह्मणस्य कालकलनाविभागः दृष्ट्वानया दिव्यम् (१०००००००००)।

इत्येतत्कथितं लोकप्रकाशं शाश्वतीमतम्।
येन विज्ञानमात्रेण सर्वज्ञत्वं प्रपद्यते ॥ १ ॥

इति क्षेमेन्द्रविरचिते सर्वशास्त्रोद्धृते लोकप्रकाशके चतुर्थः प्रकाशः ॥ ४ ॥

इति लोकप्रकाशः समाप्तः ॥

—=-***०***-=—